## सद्‌गुरु भगवान् श्री श्रीधरकवचस्तोत्रम् ।

अथातः सम्प्रवक्ष्यामि कवचं श्रीधरं गुरुं ।
यस्य स्मरणमात्रेण मुच्यन्ते पातकैर्नराः ॥

श्रीगुरुश्रीधरकवचस्तोत्रमन्त्रस्य परमात्मा ऋषिः । अनुष्टुप् छन्दः । श्रीगुरु श्रीधरो देवता । गुं बीजं । रुं शक्तिः । श्रीधरेति कीलकम् ॥ श्रीं अङ्गुष्ठाभ्यां नमः । धं तर्जनीभ्यां नमः । रं मध्यमाभ्यां । श्रीं अनामिकाभ्यां नमः । धं कनिष्ठिकाभ्यां नमः । रं करतलकरपृष्ठाभ्यां नमः ॥ (एवं हृदयादि न्यासः) भूर्भुवःसुवरोमिति दिग्बन्धः ॥

**अथ ध्यानम्**

ध्यायेब्रह्म सनातनं गुरुवरं मोक्षश्रियं धारिणं ।
ब्रह्मानन्दरसार्णवं सुखघनं भक्तेष्टकल्पद्रुमम् ॥

अज्ञानान्धनिवारणं गुणनिधिं भक्तप्रियं सुंदरं ।
जीवानां तरणार्थमेव सततं ज्ञानप्रदं श्रीधरम् ॥

(इति ध्यानम्)

श्रीधरः पातु मूर्धानं सहस्रारेण शोभितः ।
भालं पातु गुरुर्देवः चन्द्रमण्डलमण्डितः ॥ १ ॥

अक्षौपात्वक्षयः श्रीमान् अच्युतानन्तरूपकः ।
भ्रूमध्यं पातु सर्वज्ञः मोक्षानन्दस्वरूपिणः ॥ २ ॥

आनन्दात्मा श्रुतिः पातु श्रुतिसिद्धान्तगोचरः ।
नासिकां पातु विश्वात्मा विश्वातीतः परात्मनः ॥ ३ ॥

मुखं मुक्तिकरः पातु भक्तकैरवचन्द्रमाः।
चिबुकं चिन्मयः पातु चिदानन्दस्वयम्प्रभः ॥ ४ ॥

जिह्वां वेदनिधिः पातु वेदवेदान्तगोचरः।
दन्तान्पातु दानवारिः धर्मरक्षणदक्षकः ॥ ५ ॥

ओष्ठं पातु परिव्राजः वैराग्यज्ञानसागरः।
कपोलं श्रीकरः पातु कमलाम्बातनूद्भवः ॥ ६ ॥

कण्ठं दण्डधरः पातु ज्ञानदण्डसुशोभितः।
स्कन्धौ चन्द्राननः पातु चन्द्रकोटिप्रभासमः ॥ ७ ॥

भूमानन्दर्भुजौ पातु ब्रह्मानन्दप्रदायकः।
करौ कारुणिकः पातु कमण्डलुधरः प्रभुः ॥ ८ ॥

वक्षःस्थलं हरिः पातु सर्वपापप्रणाशनः।
हृदयं श्रीगुरूः पातु मोक्षश्रीधारणाधिपः ॥ ९ ॥

उदरं वरदः पातु विश्वव्यापिस्वरूपकः।
नाभि पातु गह्वरेष्ठः नामरूपविवर्जितः ॥ १० ॥

गुह्यं पातु गुह्यरूपः हृदयाब्जनिवासिनः।
ऊरुं गुरुवरः पातु ऊहापोहविवर्जितः ॥ ११ ॥

जङ्घे ज्ञाननिधिः पातु ज्ञानमात्रैकनिर्मलः।
मूलाधारं गुरुः पातु मायाविद्याविनाशकः ॥ १२ ॥

पादौ पातु पूज्यपादः पापविध्वंसकारकः।
चर्म दिगम्बरः पातु चारुकाषायभूषणः ॥ १३ ॥

अङ्गुलीन्देशिकः पातु मोक्षापाणिर्गुरोत्तमः।
रक्तं भक्तप्रियः पातु भक्तानुग्रहशीलकः ॥ १४ ॥

मांसं मीमांसकः पातु मातृवात्सल्यसंयुतः ।
मज्जान् तु अजरः पातु जन्मकर्मनिवर्तकः ।। १५ ।।

अस्थीनि स्थिरधीः पातु कूटस्थोऽचलरूपिणः ।
मेदो वेदनिधिः पातु मेधाबुद्धिप्रदीपकः ।। १६ ।।

शुक्रं सुखकरः पातु सुखशान्तिप्रचोदकः ।
मनोबुद्ध्यहंकारेभ्यो रक्षयेदन्तरात्मनः ।।। १७ ।।

कर्मेन्द्रियाणि पात्वीशः कैवल्यसुखदेश्वरः ।
ज्ञानेन्द्रियाण्यजः पातु अव्याजकरुणाकरः ।। १८ ।।

प्राणान्पातु महायोगी पुराणपुरुषोत्तमः ।
सर्वाङ्गं पातु सर्वात्मा सच्चिदानन्दविग्रहः ।। १९ ।।

गृहाराम धनक्षेत्र पुत्रादीन् रक्षयेद्विभुः ।
भुम्यादीन्पातु धर्मज्ञः धर्मोध्दारावतारकः ।। २० ।।

आत्मानन्दः सुखं पातु स्वानन्दामृततृप्तकः ।
दुःखात्पातु निजानन्दः ब्रह्मानन्दस्वरूपकः ।। २१ ।।

प्राच्यां पातु गुरुर्ब्रह्म पात्वाग्नेय्यां परात्मनः ।
याम्यां धर्मात्मकः पातु नैऋत्यां पातु शंकरः ।। २२ ।।

प्रतीच्यां पुरुषः पातु वायव्यां पातु प्राणदः ।
कौबेर्यां भगवान्पातु पात्वीशान्यां सदाशिवः ।। २३ ।।

ऊर्ध्वाधोदेशतः पातु त्रैमूर्त्यात्मकरूपकः ।
दिवां चिदम्बरः पातु रात्रौ चन्द्रंनिभाननः ।। २४ ।।

यक्षराक्षसभूताद्यात् पातु मां श्रीधरेश्वरः
सर्वज्ञः पातु सर्वत्र सर्वमङ्गलदायकः ।। २५ ।।

षण्णामरीणां वर्गञ्च हिनस्त्यूर्मीँश्च षड्विधान् ।
रोगान्निरामयः पातु नित्यशुद्धनिरञ्जनः ॥ २६ ॥
द्वन्द्वदुःखाद्विभुः पातु द्वन्द्वातीतैकसद्गुरुः ।
व्याघ्रचोरादिभीतेश्च पातु मां सर्वरूपकः ॥ २७ ॥
श्रीधरानुग्रहादुक्तं मया कवचमुत्तमम् ।
संसारामयतप्तानां शाश्वतं मोक्षदं शुभम् ॥ २८ ॥
यः सदा धारयेद्भक्त्या स्तोत्रं कवचमुत्तमम् ।
न तस्य जायते क्वापि अशुभं गुर्वनुग्रहात् ॥ २९ ॥
धर्मार्थकाममोक्षाणां स्तोत्रमेतत्परायणम् ।
पुत्रमित्रकलत्रादि सर्वसन्तोषसाधकम् ॥ ३० ॥
त्रिसन्ध्यं पठते यस्तु श्रद्धाभक्तिसमन्वितैः ।
तस्य रोगाः प्रणश्यन्ति सर्वबाधा विनश्यति ॥ ३१ ॥
बहुनाकिमिहोक्तेन यद्यन्मनसि वर्तते ।
श्रीगुरोनुग्रहादेव तत्तत्सर्वं भवेदिह ॥ ३२ ॥

**श्रीगुरु श्रीधरस्तोत्रम्--**

मोक्षानन्दनिधिं सुशान्तिनिलयं भ्रान्तिच्छिदं ज्ञानदं ।
संसारार्णवतारकं मुनिनुतं वेदान्तवेद्यं विभुम् ॥
भूमाख्येयमनन्तवीर्यमतुलं मोक्षेच्छुनां जीवनम् ।
वन्दे सद्गुरु श्रीधरं भवहरं सिद्धान्तरत्नाकरम् ॥ १ ॥
धर्मोध्दारधुरीणमद्भुतमहो धर्मध्वजध्येयिनं ।
ध्यानेनोधृतशुद्धबुद्धिमभयं धर्मिष्ठगेयं गुरुम् ॥
वेदान्ताम्बुधिमन्थनोद्भवसुधा वाङ्माधुरीधारिणं ।

